## ॥ श्रीकेदार कवचम् ॥

श्रीगणेशाय नमः ॥ श्रीरवलनाथाय नमः ॥

अस्य श्रीरवलनाथकवचस्तोत्र मंत्रस्य ॥

ब्रह्मणे ऋषये नमः । शिरसि ॥ अनुष्टुप् छंदसे नमः ॥ मुखे । श्रीरवलनाथाय नमः ॥ हृदये ॥

रं बीजाय नमः ॥ गुह्ये ॥ वं शक्तये नमः ॥ पादयोः ॥ लं कीलकाय नमः ॥ सर्वांगे ॥

श्रीरवलनाथप्रीत्यर्थे जपे विनियोगः ॥

**अथ ध्यानं**

केयूरादिविभूषितैः करतलैरत्नांकितैः । सुंदरं नानाहारविचित्रपन्नगयुतैर्हेमांबरैर्मंडितम् ।

हस्ताभ्यां धृतखड्गपात्रडमरूशूलं सदा बिभ्रतं वाजीवाहनदैत्यदर्पदलनं केदारमीशं भजे ॥१॥

केदारः पूर्वतः पातु चाग्नेय्यां रवलेश्वरः । दक्षिणे वारिजाक्षस्तु नैर्ऋत्यां रक्षसूदनः ॥२॥

पश्चिमे पन्नगेशश्च वायव्यां दैत्यनाशकः । उत्तरे उत्तरेशश्च ईशान्यां ईशएवच ॥ ३॥

ऊर्ध्वं गंगाधरः पातु धरायां च त्रिविक्रमः । एवंदशदिशान्यस्य पश्चादंगेषुविन्यसेत् ॥४॥

शिखायां रेणुकानाथो मस्तके भाललोचनः भालं मे रक्षभगवन् भ्रूमध्ये मेदिनीपतिः ॥५॥

नेत्रयोर्ज्योतिनाथश्च कर्णयोः कीर्तिवर्धनः । कुंडली मे कपोलौच नासिकां विघ्ननाशनः ॥६॥

ओष्ठद्वयमुमानाथो दंतयोर्धरणीधरः । जिह्वायां वेदजिह्वश्च हनुश्च हनुमत्प्रियः ॥७॥

ग्रीवायां नीलकंठश्च स्कंधौ स्कंदप्रियंकरः । बाह्वोः शस्त्रभृतां श्रेष्ठो हस्तौ डमरुधारकः ॥८ ॥

हृदयं विश्वनाथश्च उदरं मे जनप्रियः । नाभिं पातु गुहावासः कटीमध्यं कपालभृत् ॥ ९॥

गुह्यो गुहानिवासश्च ऊरुभ्यां उक्षवाहनः । जान्वोर्जह्नुसुताधारी जंघयोर्जघनोद्बली ॥१०॥

गुल्फयोर्गूढकर्तात्मा पादयोः पदवंदितः । नखेषु रोमकूपेषु व्यापकः सर्वसंधिषु ॥ ११ ॥

अग्रतः पातु मे खड्गी पृष्ठतः पातु शूलवान् । पातु मां पात्रधारीच वातपित्तकफादिषु ॥१२॥

जले जलधरः पातु स्थले स्थाणुः सनातनः । महार्णवे महादुर्गे अग्निचोरभयेषु च ॥१३॥

शस्त्रक्षतेषु यो रक्षेद्रत्नासुरनिबर्हणः । सुप्तिप्रमादविषदै रक्षेन्मां गिरिवासकः ॥ १४ ॥

य इदं कवचं दिव्यं केदारस्य महात्मनः । पठति श्रृण्वतेवापि सर्वपापैः प्रमुच्यते ॥ १५ ॥

इति श्रीपद्मपुराणे करवीरखंडे केदारकवचं संपूर्णम् श्रीनाथचरणार्पणमस्तु ॥

## ॥ श्रीरवलनाथ स्तवराज स्तोत्रम्  ॥

श्रीगणेशाय नमः ॥ श्रीरवलनाथाय नमः ॥

खड्गशूलडमरुपात्रदधानं रत्नभूधरमणिरणदीक्षि तुरंगवाहनमयं हतदैत्यं तं नमामि ॥१॥

सततं कुलदैवतम् देवं दक्षिणकेदारं रत्नाचलनिवासिनम् । जमदग्निमहं वंदे रवलेशमभीष्टदम् ॥२॥

रत्नासुरमिदंशूरं त्रिमूर्तिलिंगचिन्हितम् । ज्योतिरवलनाथं च वंदे देवारिमर्दनम् ॥३॥

एकवीरापतिं सौम्यं ज्योतिर्लिंगपरंतपम् । रवलाख्यं महाभागं वंदे भक्तार्तिनाशनम् ॥४॥

त्रिशूलं डमरुं खड्गं पात्रं च करपंकजैः । बिभ्राणरेणुकानाथं वंदे तं रवलेश्वरम् ॥५॥

महालक्ष्मीप्रियं शांतं ब्रह्माविष्णुशिवात्मकम् । ब्रह्मकर्मरतं दांतं वंदे कामप्रदं द्विजम् ॥६॥

शेषस्थं करुणासिंधुं कारुण्यं कविताप्रदम् । दैत्यघ्नं वसुदं विप्रं वंदे वैरिविमर्दनम् ॥७॥

कुंडलिनं विरूपीनं शुभं यज्ञोपवीतिनम् । वाणगी नूपुरारावसंयुक्तं वंदे पन्नगवाहनम् ॥ ८॥

दीनानाथं नाथनाथं सिद्धिदं सिद्धिसेवितम् । भुक्तिमुक्तिप्रदातारं वंदे हंसकलात्मकम् ॥९॥

यइम स्तवराजंतु रवलेशमहात्मनः । त्रिकालंयोजपेत्प्राज्ञस्तस्यस्याद्वांछितं फलम् ॥१०॥

शतावृत्या व्याधिनाशं सहस्राद्वर्तनाद्वसु । विद्यायुष्यं लभेच्छीघ्रं भवत्येवनसंशयः ॥। ११॥

धर्मार्थकाममोक्षाणां प्राप्तिस्यान्नित्यजाप्यतः ।

इति श्रीब्रह्मांडपुराणे अगस्तिनारदसंवादे श्रीरवलनाथस्तवराजस्तोत्रं संपूर्णम् ।

श्रीनाथचरणार्पणमस्तु ॥

## ॥ श्रीकेदार सहस्रनामस्तोत्रम् ॥

ॐ श्रीगणेशाय नमः ॥ ॐ श्रीरवलनाथाय नमः ॥

कदाचित्संचरन्योगी जामदग्न्याश्रमागतः। सत्कृतस्तेन तं प्राहश्लक्ष्णं मधुरया गिरा ॥१॥

मुने रवलनाथस्य रत्नाचल निवासिनः। सहस्रनामस्तोत्रं मे कथयस्व सविस्तरे ॥२॥

एवं स योगिना पृष्टो जामदग्न्यरुवाच तम् । त्वया रवलनाथस्य यत्पृष्टो मंगलप्रदम् ॥३॥

सहस्रनामस्तोत्रं ते श्रृणुष्व वदतो मम ॥४॥

अस्य श्रीकेदारसहस्रनामस्तोत्रमंत्रस्य । जामदग्न्य ऋषिः॥ अनुष्टुप् छंदः ।

श्रीरवलनाथ परमात्मा देवता । श्रीरवलनाथप्रसाद सिध्यर्थे जपे विनियोगः॥

**अथ न्यासः।**

ॐ रं अंगुष्ठाभ्यां नमः ॥ ॐ वं तर्जनीभ्यां नमः ॥ ॐ लं मध्यमाभ्यां नमः ॥

ॐ रं अनामिकाभ्यां नमः ॥ ॐ वं कनिष्ठिकाभ्यां नमः ॥

ॐ लं करतलकरपृष्ठाभ्यां नमः ॥

ॐ रं हृदयाय नमः। ॐ वं शिरसे स्वाहा। ॐ लं शिखायै वषट्।

ॐ रं कवचाय हुम्। ॐ वं नेत्रत्रयाय वौषट्। ॐ लं अस्त्राय फट् ॥

**अथ ध्यानं ॥**

ध्यायेद्देवं परेशं त्रिगुणगुणमयं ज्योतिरूपस्वरूपम् । वामेपात्रंत्रिशूलं डमरुगसहितं खड्गदक्षेविराजम् ।

शेषारूढं सुरेशं कमलपदयुगं भक्तकारुण्यगम्यम् । सर्वांगे लिंगभूषं उपवितसहितं नाथ मार्गाधिपत्यम् ॥१॥

दैत्यघ्नं भक्तपालं सकलमघहरं ज्ञानमानंदचित्तम् । सर्वार्थं सर्वरूपं अगुणसगुणदं श्रीपादं नाथरूपम् ॥२॥

शेषारूढो भवेद्विष्णुस्त्रिशूली शिवरूपधृक् । उपवीती भवेद्ब्रह्मा खड्गशक्तिसमन्वितः ॥३॥

सर्वदेवमयीमूर्तिः सर्वाराध्यस्वरूपवान् । सर्वाचरणमार्गाणां सर्वकर्मफलप्रदः ॥४॥

हेतुभूतशरीरस्थं हेतुसाधनवर्जितम् । अहेतुकसदानंदम् श्रीनाथप्रकृतीश्वरम् ॥५॥

**इति ध्यानं ॥**

ॐ श्रीनाथो रेणुकानाथो जगन्नाथो जगाश्रयः । श्रीगुरुर्गुरुगम्यश्च गुरुरूपः कृपानिधिः ॥१॥

गणेशोगणनाथश्च गणपूज्योगणाश्रयः । पीठेशो पीठरूपस्थो पीठपूज्यः सुखावहः ॥२॥

भैरवो भैरव श्रेष्ठो भैरवायुधधारकः । सिद्धसिद्धिप्रदः साध्यः सिद्धमंडलपूजितः ॥ ३ ॥

बटुरूपो बटुस्वामिन् बटुपालनकारणः । पदरूपः पदप्राप्तः पदेशः पदनायकः ॥४ ॥

दूतिक्रमो दूतिनाथः शांभवः शंकरप्रदः । वीरो वीरप्रदः शूरो वीरेशो वरदायकः ॥५ ॥

वीरनाथो वीररूपो वीर आयुधधारकः । चतुराश्रमनिष्ठश्च चतुर्मूर्तिश्चतुर्भुजः ॥६ ॥

षष्ठीशो घटिकानाथः पलसंकेतवर्धकः । नवनाथो नवांकस्थो नवचक्रेश्वरोविभुः ॥७ ॥

वीरावलिप्रियः शांतो युद्धविक्रमदर्शकः । पंचपंचकतत्वस्थस्तत्वातीतः स्वरूपकः ॥८ ॥

श्रीमंतः श्रीकलानाथः श्रेयदः श्रेयवारिधिः । मालाधरो मुनिश्रेष्ठो मुनिमानसहंसकः ॥९ ॥

मंत्रराजो मंत्ररूपो मंत्रपुण्यफलप्रदः । गुरुमंडलरूपश्च गुरुमंडलकारणः ॥१० ॥

तिथिमंडल रूपश्च वृद्धिक्षय विवर्जितः । तिथिरूपस्तिथिप्रीत स्तिथिरूपविवर्जितः ॥११ ॥

प्रथमःप्रथमाकारो द्वितीयः शक्तिसंयुतः । गुणत्रय तृतीयोसौ युगरूप चतुर्थकः ॥१२ ॥

पंचभूतात्मसाक्षीश ऋतु षड्गुण भावनः । सप्त धातुस्वरूपश्च अष्टमः सिद्धिसिद्धिदः ॥१३ ॥

नवनाद नवम्यस्थो दशदिकरूपधारकः । रुद्रएकादशाकारो द्वादशादित्यदीपकः ॥१४ ॥

सर्वसिद्धि त्रयोदश्यो मनुरूप चतुर्दशः । पूर्णरूप त्रिपंचस्थ स्त्रिपंचातीतमानसः ॥१५ ॥

रकारब्रह्मरूपश्च वकारोविष्णुरव्ययः । लकारः शिवरूपोऽसौ श्रीनाथप्रकृतीश्वरः ॥१६ ॥

अकारादिक्षकारांत वर्णसंपूर्णमंत्रगः । व्यंजनो व्यंजनातीतो विसर्गः स्वरभूषणः ॥१७ ॥

अनंतअव्ययस्त्वाद्य आदिशक्तिवरप्रदः । आनंद आद्यसंस्थान आद्यकारणलक्षणः ॥१८ ॥

कर्ता कारयिता कार्यः कार्यकारणलक्षणः । कलानाथः कलातीतः काव्यनाटकबोधकः ॥१९ ॥

कालहंता कालसाध्यः कालचक्रप्रवर्तकः । कालाभिरुद्रसंदीप्तः कालांतकभयंकरः ॥२० ॥

खंड्गीशः खड्गनाथश्च खड्गशक्तिपरायणः । गर्वघ्नो दैत्यसंहर्ता गमागमविवर्जितः ॥२१ ॥

घनश्यामो घनानंदो घनधाराप्रवर्तकः । घनकर्ता घनत्राता घनबीजसमृद्धिदः ॥२२ ॥

ॐ कारसिद्धिसाध्यश्च वेदवर्णनसांगकः । चत्वारिवर्णरूपश्च चतुराश्रमनिश्चयः ॥२३ ॥

छंदसारश्छंदकर्ता छंद अन्वयधारकः । छत्रसिंहासनाधीशो भक्तच्छत्रसमृद्धिमान् ॥२४ ॥

जपो जपप्रियो जाप्योजपसिद्धिप्रदायकः । जपसंख्याजपाकारः सर्वमंत्रजपप्रियः ॥२५ ॥

झषरूपधरो देवो झषवृद्धिविवर्धकः । यमशासनकर्ता च यमपूज्यो धनाधिपः ॥२६ ॥

टंकायुधः शिवप्रीतो टंकारो लांगलाश्रयः । डमरुप्रीतिडामर्यो तंत्रडामरस्थापकः ॥२७ ॥

ढकारढवलाध्यानः पशुपाशविमोचकः । नवार्णजपसुप्रीतस्तंत्रविग्रहविग्रहः ॥२८ ॥

थक्कितश्चित्त रूपश्च दयारूपोदयाकरः । धनदो धननाथश्च धनधान्यप्रदायकः ॥२९ ॥

नररूपो नरश्रेष्ठो नरोत्तमनराधिपः । नरसंस्थानकर्ताच नरसर्वत्रव्यापकः ॥३० ॥

नादो नादप्रियो नाद्यो नादब्रह्मांडपूरकः । नादज्ञानरतो नित्यो नादांतपददायकः ॥३१ ॥

पलरूप: पलातीत: पलअक्षरलक्षणः । पलसंख्याक्षरोवर्ण: संख्यासंकेतकारकः ॥३२॥

फलदो फलदाता च फलकर्ताफलप्रियः । फलाश्रय: फलातीतः फलमुक्तिनिरंजन: ॥३३॥

बलरूपो बलप्रीतो बलाश्रय निराश्रयः । बलानंदो बलग्रामो बलिशो बलनायकः ॥३४॥

भविष्यज्ञो भयत्राता भयकर्ता भयारिहा । भावनारूपध्यानस्थो भावार्थफलदायकः ॥३५॥

मनस्थो मनमध्यस्थो मनोमायाविवर्जितः । मनःसंतापहर्ताच मनमानसमोहनः ॥३६॥

मनःकल्पितकल्पस्थ: कल्पनापूरणालयः । मन:संकल्पसंकल्पो मन:संकल्पपूरक: ॥३७॥

मन:स्वच्छंदकर्ताच छंदमानसंतोषकः । मानसो मानसाक्षिस्थो मानसोल्हासकारणः ॥३८॥

मानातीतः स्वयंमान्यो भक्तमानससंश्रयः । मन:कामादिवाचांशो मनोबुद्धिविवर्जितः ॥३९॥

यशस्वी यशकर्ताच यशदो यशनायकः । यशमार्गो यशप्राप्तो यशमार्गसुदीपकः ॥४०॥

रकारअग्निबीजस्थो रवलाख्यानकीर्तनः । रत्नप्रभारत्नदीप्तो रत्नासुरवधोत्सवः ॥४१॥

रतिनाथो रतिप्रीतो रतिलावण्यसुंदरः । रमाप्रियकरो रम्यो रमासाहामहोत्सवः ॥४२॥

रत्नाचलनिवासस्थो रत्नभूषणभूषणः । रत्नेशो रत्नदाताच रत्नविग्रहविग्रहः ॥४३॥

लययोगो लयध्येयो लयसाधनसाधनः । लयालयजितो लभ्यो लब्धवांछाप्रवर्तकः ॥४४ ॥

वर्धमानो वृद्धरूपो वृध्दिभक्ति प्रियोत्तमः । वनस्थो वनरूपस्थो वनक्रीडापरायणः ॥४५॥

वयातीतो वयस्तृप्तो वरुणो वरुणालयः । वर्षाकालो वर्षरूपो वर्षांतो वर्षलक्षणः ॥४६॥

शक्तिरूप: शक्तिदाता सर्वशक्तिपतिः प्रभु । शक्तिनाथ: शक्तिजित: शक्तिएवउपासकः ॥४७॥

षण्मासायनकर्ताच विषुवादिविभावकः । ऋतुकर्ता ऋतुप्रीतः ऋतुषटक विग्रहाश्रयः ॥ ४८ ॥

सर्वत्रः सर्वदापूज्यो सर्वपूजकरक्षकः । सर्वसौभाग्यनित्यस्थो नित्यार्चनरताश्रयः ॥ ४९॥

सदाचाररतो नित्यो नित्याश्रयरताश्रयः । सर्ववर्णमयोवर्णो वर्णधर्मपरायणः ॥५०॥

सर्वज्ञः सर्वगः सर्वः सर्वजित्सर्वनायकः । सर्वांतरः सर्वव्यापी सर्वकर्मप्रवर्तकः ॥५१॥

सर्वार्थसाधकः साध्यः सिद्धिसाधनसाधकः । साधनोपायदाता च साधनाश्रेयदायकः ॥ ५२॥

हयासनसमारूढो हयनाथो हयाधिपः । हविर्भोक्ता हविप्रीतो हव्यवाहनहव्यकृत् ॥५३॥

लकारवर्णभेदस्थो लघुरुपो लघुक्रियः । स्थूलरूपः स्थूलकार्यः स्थूलास्थूलविशालगः ॥५४॥

क्षमारूपो दयासिंधुः क्षमालक्षणदायकः । क्षमाकार: क्षमानाथ: क्षमापूरितलोचनः ॥५५॥

क्षमाचिंतनप्रीतस्थ: क्षमासाधनसाधकः । क्षमावंत अतिप्रीतः क्षमा आचरणोन्मुखः ॥५६॥

ओंकारमूलमंत्रस्थो मातृकावर्णसंभवः । मातृकाव्यापितब्रह्म मातृकासिद्धिदायकः ॥५७॥

षटचक्रभेदकर्ताच षटचक्राश्रयसंश्रयः । षटचक्रमातृकाव्याप्तः षटचक्रवर्णलक्षणः ॥५८॥

मूलाधारनिवासश्च गणेश: सिद्धिदायकः । स्वाधिष्ठानो ब्रह्मरूप: प्रजासृजनकारणः ॥५९॥

मणिरूपो महाविष्णु: इच्छाशक्तिसमन्वितः । अनाहतो महादेवो द्रव्यशक्तिसमाहितः ॥६० ॥

जीवरूपविशुद्धस्थः प्राणशक्तिमुखाश्रयः । हंक्षाब्जो गुरुरूपोऽसौ हंसमंत्रार्थमंत्रगः ॥६१ ॥

सहस्रांशुः सहस्राक्षः शीर्षपादसहस्रवान् । सहस्रायुधहस्तस्थो वर्णसाहस्रकर्णिकः ॥६२ ॥

संचिन्मयसमाधिस्थो बिंदुरूपसुखाश्रयः । सर्वलक्षणसंपन्नः सर्वत्रः सर्वतोमुखः ॥६३ ॥

सर्वज्ञः प्रीतिचित्तोऽसौ सर्वज्ञानप्रियोत्तमः । सर्वसंस्थानदेवस्थः सर्वशक्तिसमन्वितः ॥६४ ॥

सर्वेश्वरः सर्वकार्य: कार्याकारणवर्जितः । ज्योतिरूपो जगत्साक्षी ज्योतिर्विज्योतिषाश्रयः ॥६५ ॥

ज्योतिर्लिंगो ज्योतिमूर्ति: ज्योतिः कर्ताजगन्मयः । लिंगचिह्नितसर्वांगो लिंगार्चनप्रियोत्तमः ॥६६ ॥

एककालो द्विकालश्च त्रिकालः सार्वकालिकः । कालकर्ता कालनेमी कालसंख्याग्निदीपकः ॥६७ ॥

उपासकप्रियोपास्य उपासकप्रियंकरः । महाकालो महारूपो महाशूरो महोत्सवः ॥६८ ॥

महाभोगो महावेगो महायोगो महानिधिः । महानिर्वाणरूपस्थो चित्तनिर्वाणदर्शकः ॥६९ ॥

महाबोधो महायोध्दो स्वास्त्रप्रत्यस्त्रवर्षक: । महायागहविर्भोक्ता महाकर्मफलप्रदः ॥७० ॥

ब्रह्मज्ञो ब्रह्मरूपश्च ब्राह्मण्योब्राह्मणोत्तमः । ब्रह्मकर्मक्रियासक्तः कर्मब्रह्मस्वरूपगः ॥७१ ॥

क्षेत्रज्ञः क्षेत्रपालश्च क्षेत्रकीर्तनवर्धकः । क्षात्रधर्मप्रवीणश्च ख्यातिकर्ताक्षयातिगः ॥७२ ॥

विश्वरूपो विश्वकर्ता विश्वासफलदायकः । मुनिध्येयो मुनित्राता मुनिमानसहंसगः ॥७३ ॥

इच्छाज्ञानक्रियातीत इच्छाज्ञानक्रियाश्रयः । वांछाकल्पलतारूपः कल्पनावांछितप्रदः ॥७४ ॥

कल्पवृक्ष: कल्पनाथ: कल्पनाकारमानसः । कल्पकर्ता कल्पसाक्षी महाकल्पप्रवर्तकः ॥७५ ॥

सामगायनसुप्रीतः सामस्वरप्रकाशकः । वेदसारो वेदगम्यो वेदवेदांगपारगः ॥७६ ॥

वेदांतभाष्यरूपस्थो वेदांतप्रतिपाठकः । भाष्यलक्षणवेदांत: सिद्धांत: सर्वदर्शकः ॥७७ ॥

शास्त्रार्थशास्त्रकर्ताच शास्त्रमार्गप्रवर्तकः । शास्त्रशासनकर्ताच शास्त्राधारो जगन्मयः ॥७८ ॥

आनंदरूपनित्यस्थ: प्रकाशानंदरूपवान् । अखंडानंददाताऽसौपूर्णानंदस्वरूपवान् ॥७९ ॥

निराधारो निराकारो निर्मलो निर्मलाश्रयः । निर्गुणो निर्मलातीतो निष्कामो निरुपप्लवः ॥८० ॥

नित्यमुक्तो निर्विकारो निष्प्रपंचोनिराश्रयः । नित्यशुद्धो नित्यसाध्यो नित्यानंदवरप्रदः ॥८१ ॥

निष्कारणो निष्कलंको निरूपाधिर्निरीश्वरः । निर्मदो मदहंताच निश्चिंतो निरहंकृतिः ॥८२ ॥

निर्मोहो मोहनाशश्च निर्ममो ममताहरः । निष्पाप: पापनाशश्च निःक्रोधः क्रोधनाशकः ॥८३ ॥

निःसंशय: संशयघ्नो निर्लोभो लोभनाशकः । निर्भावो भावनाशश्च निर्विकल्पो विकल्पकृत् ॥८४ ॥

निर्भेदो भेदहंताच निर्नाशो मृत्युनाशकः । निंदाद्वेषातीतकर्ता निंदाद्वेषापहारकः ॥८५ ॥

गोपालो गोमतिप्रीतो गोधनाधिपईश्वरः । गोसाक्षी गोप्रवर्तो गोरक्षकगुहाश्रयः ॥८६ ॥

ग्रहनक्षत्रतारस्थस्तारकाज्योतिनायकः । तारणाश्रयरूपस्थो तारणाश्रयदायकः ॥८७ ॥

तारकोतारकस्वामी तारणस्तारणप्रियः । एकतारो द्वितारश्च त्रितारो मंत्रकाश्रयः ॥८८ ॥

एकरूपो एकनाथो बहुरूपस्वरूपवान्। लोकसाक्षी त्रिलोकेशस्त्रिगुणातीतमूर्तिमान् ॥८९॥
यज्ञप्रियो यज्ञकर्ता यजमानस्वरूपवान् । यजुर्वेदो यजुः साक्षी यजुर्वेदहविप्रियः ॥९०॥
बालतारुण्यरूपस्थो वृद्धरूपप्रदर्शकः ।अवस्थात्रयभूतस्थो अवस्थात्रयवर्जितः ॥९१॥
वाचाचत्वारिनिर्माणो वाचातीतप्रकाशवान् । वाच्यवाचकभावार्थो वाक्यार्थप्रियमानसः ॥९२॥
महावाक्यप्रमाणस्थो महावाक्यप्रबोधकः । अर्थसाक्षी अर्थरूपो ज्योतिरूपः प्रकाशवान् ॥९३॥
जिताहारो जितक्रोधो जितमानसमानसः । परमाणुः प्रमाणस्थो कोटिब्रह्मांडनायकः ॥९४॥
श्रीकृष्णद्वारकानाथो गोपिकाभोगदायकः । कंसारि पूतनाहंता संसार श्रमनाशकः ॥९५॥
मुकुंदो मुक्तिदाताच मुक्तो मुक्तजनाश्रयः । मुचकुंदवरप्राप्तो दैत्यसंहारकारकः ॥९६॥
नादासक्तो नादकर्ता वेणुवादनतत्परः। गोपिकामनसंहर्ता गोपबालकनायकः ॥९७॥
गोवर्धनधरो गुप्तो भावनागुप्तसंज्ञकः । भावनापूरण श्रेष्ठो भावाभावविवर्जितः ॥९८॥
नरनारायणो विष्णुः कार्याकारणरूपवान् । कार्यसाक्षी कार्यरूपी कार्याकार्यप्रवर्तकः ॥९९॥
पन्नगः पन्नगाधीशः पन्नगासनविग्रहः । पंचाशद्वर्णपीठस्थ:पंचाक्षरजपप्रियः ॥१००॥
स्वरविकृतिकर्ताच स्वरातीत:स्वयंविभुः। स्वर्गति:स्वर्गतिर्दाता नियंता नियताश्रयः ॥१०१॥
भूमिरूपो भूमिकर्ता भूधरो भूधराश्रयः । भूतनाथो भूतकर्ता भूतसंहारकारकः ॥१०२॥
भविष्यज्ञो भयत्राता भवदो भवहारकः । वरदो वरदाताच वरप्रीतो वरप्रदः ॥१०३॥
कूटस्थःकूटरूपस्थस्त्रिकूटोमंत्रविग्रहः । मंत्रार्थी मंत्रगम्यश्च मंत्रांशो मंत्रभागकः ॥१०४॥
सिद्धिमंत्र: सिद्धिदाता जपसिद्धिस्वभावकः । नामातीतोऽनामरूपो नामरूपोगुणाश्रयः ॥१०५॥
गुणकर्ता गुणत्राता गुणातीतो गुणारिहा । गुणग्रामो गुणाधीशो गुणनिर्गुणकारकः ॥१०६॥
अकारमातृरूपस्थो अकारातीतभावनः । परमैश्वर्यदाताच परमः प्रीतिदायकः ॥१०७॥
परमःपरमानंदःपरानंदपरात्परः । वैकुंठपीठपीठस्थो वैकुंठो विष्णुविग्रहः ॥१०८॥
कैलासवासी कैलासः शिवरूपीशिवाप्रियः । जटाजूटो भूषितांगो भस्मधूसरभूषणः ॥१०९॥
दिग्विलासो दिग्विभागो दिगंतरनिवासकः । ध्यानकर्ता ध्यानमूर्तिर्धरणाधारणप्रियः ॥११०॥
तत्त्वस्थस्तत्त्वरूपस्थो तत्त्वातीतोतितत्त्ववित् । तत्त्वसाम्यस्तत्त्वगम्यस्तत्त्वार्थस्तत्त्वदर्शकः ॥ १११ ॥
तत्त्वसारस्तत्त्वमार्गस्तत्त्वांतस्तत्त्वविग्रहः । तत्त्वेश्वरस्तत्त्वनाथस्तत्त्वदस्तत्त्वकारणः ॥११२॥
दर्शनातीत गोदृश्यो दृश्यातीतोऽतिदर्शकः । दर्शनो दर्शनातीतो भावनाकाररूपकृत् ॥११३॥
मणिपर्वतसंस्थानो मणिभूषणभूषणः । मणिप्रीतो मणिश्रेष्ठो मणिस्थो मणिरूपकः ॥११४॥
चिंतामणिगृहांतस्थः सर्वचिंताविवर्जितः । चिंताक्रांतो भक्तचिंतश्चिंतनाकारचिंतकः ॥११५॥
अचिंत्यश्चिंत्यरूपश्च निश्चिंतोनिश्चयात्मकः । निश्चयो निश्चयाधीशो निश्चयात्मकदर्शकः ॥११६॥
त्रिविक्रमस्त्रिकालज्ञस्त्रिधामात्रिपुरांतकः । ब्रह्मचारीव्रतप्रीतो गृहस्थो गृहवासकः ॥११७॥

पंचधाम परब्रह्म परमात्मा परात्परः । सर्वेश्वरः सर्वमय: सर्वसाक्षीविलक्षणः ॥११८॥

मणिद्वीपो द्वीपनाथो द्वीपांतो द्वीपरक्षकः । सप्तसागरकर्ताच सप्तसागरनायकः ॥११९॥

महीधरो महीभर्ता महीपालो महीस्वक: । महीव्याप्तो व्यक्तरूप: सुव्यक्तोव्यक्तभावनः ॥१२०॥

सुवेषाढ्यः सुखप्रीतः सुगमो सुगमाश्रयः । नारसिंहो वीरसिंहो वीरजो रजनाशक: ॥१२१॥

तापत्रयाग्निसंतप्तो समाल्हादनचंद्रमाः । तारणस्तपसाराध्यस्तनमध्ये तमोपहः ॥१२२॥

परारूप: पराध्येयः परदैवतदेवता । ब्रह्मपूज्यो जगत्पूज्यो भक्तपूज्यो वरप्रदः ॥१२३॥

आश्विनीचाश्वकर्तारो भरणीभरणोत्सवः । कृत्तिकाकृत्यरूपश्च रोहिणीबीजरोहकः ॥१२४॥

मृगशीर्षमृगस्वामी आर्द्राचार्द्रकचित्तकः । पुनर्वसुवसुप्रीतःपुष्यपुष्यार्कउत्तमः ॥१२५ ॥

आश्लेषाश्लेषनाशश्च मघामाधवगर्जकः । पूर्वापूर्वपरंदेवमुत्तराचोत्तरोत्तराः ॥१२६ ॥

हस्तो हस्तक्रियासिद्धिश्चित्राचित्रविचित्रगः । स्वातिस्वस्थमनश्चैव विशाखाविषहारक: ॥१२७ ॥

अनुराधाराधिकेशो ज्येष्ठाज्येष्ठप्रियोत्तमः । मूलकंदजगतश्रेष्ठ: पूर्वाषाढाधनाश्रयः ॥१२८॥

उत्तराषाढा उद्योगो श्रवणः श्रवणप्रियः । धनिष्ठाधनरूपश्च शततारकारकः ॥१२९॥

पूर्वाभाद्रपदाभद्रो उत्तराभद्रदायकः । रेवतीरवलेशश्च सपिंडाक्षरविग्रहः ॥१३०॥

अद्वैतद्वैतचित्तस्थो द्वैताद्वैतविवर्जितः । अभेद्य: सर्वभेद्यश्च भेदाभेदकबोधकः ॥१३१॥

लाक्षारससुवर्णाभो लक्ष्मणो लक्ष्मणाग्रजः । अयोध्यावासकर्ताच रामरूपनृपोत्तमः ॥१३२॥

धनुर्धरोधनुर्वेद्यो धनुर्भगो धनुर्जितः । नृपरूपो नराधीशः प्लवंगमप्रियोत्तमः ॥१३३॥

यागरक्षणकर्ताच हयमेधहविर्हविः । रावणांतक रामश्च बिभीषणवरप्रदः ॥१३४॥

दैत्यसंहारकर्ताच अवतारपरो हरिः । सीताप्राणकर्ताच सीताप्राणप्रियोत्तमः ॥१३५॥

संविदेश: संविदात्मा संविज्ञानप्रदायकः । संवित्कर्ताचभक्तश्च संविदानंदरूपवान् ॥१३६॥

संशयातीत: सर्वार्थ: सर्वसंशयहारकः । निःसंशयमनोध्येयः संशयात्मातिदूरगः ॥१३७ ॥

शिवमंत्र: शिवप्रीतो दीक्षाशैवस्यभावकः । भूपशिक्षाकृतो भूपो भूप भूपत्वदायकः ॥१३८॥

सर्वधर्मसमायुक्तः सर्वधर्मविवर्धकः । धर्मार्थकाममोक्षस्थश्चातुर्वर्गफलप्रदः ॥१३९ ॥

इच्छाज्ञानक्रियाकर्ता इच्छाज्ञानस्यसाधकः । इच्छामय इच्छितश्रीरिच्छितार्थार्थनिश्चयः ॥१४०॥

रविवंशकुलोत्पन्नः सर्ववंशाधिकारणः । सर्वशास्ता सर्ववेत्ता सर्वभोक्ता स्वतृप्तिवान् ॥१४१ ॥

भक्तभावावतारश्च भुक्तिमुक्तिप्रदायकः । भक्तसिद्धार्थसिद्धश्च सिद्धिबुद्धिप्रदायकः ॥१४२ ॥

वाराणसीवासदाता वाराणसीवरप्रदः । वाराणसीनाथरूपो गंगामस्तकधारणः ॥१४३॥

यमुनाप्रियचित्तश्च यमुनातीरवासकः । गंगाधरो गौरिपतिर्गजचर्मविभूषणः ॥१४४॥

पार्वतीशो पर्वतेशो पर्वतो पर्वतालयः । पर्वताश्रमकर्ताच लिंगपर्वतत्र्यंबकः ॥१४५॥

द्वादशज्योतिर्लिंगंच सर्वलिंगस्वरूपवान् । लिंगदेहो लिंगकर्ता लिंगपूज्योऽतिदुर्लभः ॥१४६॥
रुद्रप्रियो रुद्रसेव्यो रुद्ररूपो विराटकृत् । मालारुद्राक्षभूषांगो जपरुद्राक्षतोषकः ॥१४७॥
सत्यसंधः सत्यदाता सत्यकर्ता सदाश्रयः । सत्यसाक्षी सत्यलक्षी लक्षातीतमनोहरः ॥१४८॥
जनको जगदाधीशो जननीजनकः स्वयम् । जगदो जगदाकारो जनरूपो जनाश्रयः ॥१४९॥
सृष्टिस्थितो सृष्टिरूपः स्थितिरूपः स्थितिप्रदः। संहाररूप: कालाग्निः कालसंहारकारकः ॥१५०॥
पंचवक्त्र: पंचभूतस्त्रिनेत्रस्त्रिपुरारिहा । सप्तपातालपादस्थो महदाकाशशीर्षवान् ॥१५१॥
जातवेदो वामदेवो सद्योजातः श्रुतिः स्मृतिः । श्रेष्ठः श्रेष्ठकरो ज्येष्ठो जयिष्ठो जयवर्धनः ॥१५२॥
नागभूषो नागनाथो नागरूपो नगाधिपः । नगो नगप्रियो नाग्यो नगालयनगांतकः ॥१५३॥
अमृतो अमृताकारो देवो अमृतरूपकः। अमृताकारचित्तस्थ अमृतोद्भवकारणः ॥१५४॥
अमृताहारनित्यस्थ अमृतद्रवरूपिणः । अमृतांशोऽमृताधीशो अमृतप्रीतिवर्धनः ॥१५५॥
अनिर्देश्य अनिर्वांग अनंग अंगसंश्रयः । श्रेयदः श्रेयरूपश्च श्रेयातीतफलप्रदः ॥१५६॥
उत्तमो उत्तमध्येयो ध्येयातीतोति ध्येयधृक् । ध्रुवसंस्थानदाताच ध्रुवनिश्चयनिश्चयः ॥१५७॥
निश्चयो निश्चय श्रेष्ठो निश्चयातीतनिश्चयः । निश्चिंतचित्तरहितश्चित्तनिश्चयकारकः ॥१५८॥
सारांश: सारसाक्षीच सारासारनिवारणः । विचार्यमानमानस्थो विचारातीतमानसः ॥ १५९॥
धारणातीतभावस्थो धारणान्वयगोचरः । गोचरो गोचरातीत अतीवप्रियगोचरः ॥१६०॥
प्रियप्रियः प्रियस्वार्थी स्वार्थअर्थफलप्रदः । अर्थार्थसाक्षी लक्षांशो लक्षालक्षणविग्रहः ॥१६१॥
विग्रहो विग्रहातीतो भक्तनाथो जनार्दनः । जगदीशो जगत्त्राता जगन्मयजगद्गुरुः ॥१६२॥
गुरुमूर्ति: स्वयंवेद्यो वेद्यवेदकरूपकः । रूपातीतो रूपकर्ता सर्वरूपार्थदायकः ॥ १६३॥
अर्थदो अर्थमान्यश्च अर्थार्थी अर्थदायकः । अर्थांशो अर्थकर्ताच अर्थांतरमनोगतः ॥१६४॥
मनोगतो मनस्वामिन्मनोबुद्धिपरायणः । बुद्धिप्रदो बुद्धिदाता विशुद्धजनमानसः ॥१६५॥
मानसो मानसाकारो मनसातीतमानसः । सर्वमानससंपूर्णः पूर्णाश्रयजगद्विभुः ॥१६६ ॥
विभवो वैभवश्रेष्ठो सर्ववैभवदायकः । चतुःषष्टिकलासूत्रश्चतुःषष्टिकलामयः ॥१६७॥
पुराणश्रवणाकारो पुराणपुरुषोत्तमः । पुरातनः पुराख्यातः पूर्वजः पूर्वपूर्वगः ॥१६८ ॥
मंत्रतंत्रार्थसर्वज्ञः सर्वतंत्रप्रकाशकः । तंत्रवेत्ता तंत्रकर्ता तंत्रांतरनिवासकः ॥ १६९ ॥
तंत्रगम्यस्तंत्रमान्यस्तंत्रयंत्रफलप्रदः । सर्वतंत्रार्थतत्त्वज्ञस्तंत्रराज: स्वतंत्रगः ॥१७० ॥
ब्रह्मांडकोटिकर्ताच ब्रह्मांडोदरपूरकः । ब्रह्मोपदेशदाताच ब्रह्मज्ञानपरायणः ॥१७१॥
जन्मकर्ता जन्मदाता जन्मकर्मफलप्रदः । जन्मनाशो जन्मविदो जन्मांतरनिवासकः ॥१७२॥
जगद्वंद्यो जगत्पूज्यो जंगमो जंगमाश्रयः । जगदाधारकर्ताच जगदाकारकारणः ॥१७३॥
नरनारीशरीरस्थो नरनारीस्वभावकः । हेतुभूतो हेतुरूपो हेतुसाधनवर्जितः ॥१७४॥

सर्वधातुस्वरूपस्थः सर्वधातुविवर्जितः । स्वयंभूः शंभूरूपश्च सर्वसंशयहारकः ॥१७५॥
सोऽहंभावस्वभावश्च हंसविग्रहनिग्रहः । सोऽहमीति नित्यस्थो सोऽहं हंसस्वरूपवान् ॥१७६ ॥
हंस हंसस्वरूपश्च हंसविग्रहनिस्पृहः । श्वास निश्वास विश्वासो केदारो रवलेश्वर: ॥१७७॥
**( ज्योतिबाच्या नावाने चांगभले )**

**फलश्रुती**

अष्टाधिकसहस्रंतुनामसाहस्रमुत्तमम् । कीर्तयंतिसदातेषामिच्छितार्थफलंलभेत् ॥१७८॥
एककालंद्विकालंवा त्रिकालं नित्यमेव च । शत्रवस्तस्यनश्यंति क्षमारूपो भविष्यति ॥१७९॥
नित्यसंकीर्तनासक्तः कीर्तयेत्पुण्यवासरे। संक्रांतौ विषुवेचैव पौर्णिमायां विशेषतः ॥१८०॥
अमायां तु रविवारे च सप्तत्रिवारे (एकविशंति:) पाठकः । स्वप्रेदर्शनमाप्नोति कार्यभागोपि दृश्यते ॥१८१॥
रविवारे दशावृत्या रोगनाशो भविष्यति । सर्वदा सर्वकार्यार्थी जपः सिध्यति सर्वदा ॥१८२॥
धनार्थी धनमाप्नोति यशार्थी यशमाप्नुयात् । विद्यार्थी लभते विद्यां ज्ञानार्थी ज्ञानमाप्नुयात् ॥१८३॥
पुत्रार्थी लभते पुत्रं मोक्षार्थी मोक्षमाप्नुयात् । निष्कामं कीर्तयेन्नित्यं ब्रह्मज्ञानमयोभवेत् ॥१८४॥
बिल्वैर्वातुलसीपत्रैश्चंपकैर्बकुलादिभिः । कल्लारैर्जातिकुसुमैरंबुजैर्वातुलाक्षतैः ॥१८५॥
एभिर्नामसहस्रैस्तु अर्चयेद्भक्तिमान्नरः । कुलं तारयते तेषां कल्पकोटिशतैरपि ॥१८६॥
षट्त्रिंशद्दिनपर्यंतं त्रिरावृत्यापठेन्नरः । एकचित्तो अर्थयुक्तो तस्य वाक्सिद्धिर्निश्चयः ॥१८७॥
द्विमासं च त्रिमासं च षण्मासं एकभक्तितः । आयुः कीर्तिच ऐश्वर्यं प्राप्नोत्येवनसंशयः ॥१८८॥
भूपो भूपत्वमाप्नोति वैश्यो धनपतिर्भवेत् । बहुसस्यं च शूद्रस्य निश्चितार्थेन सिध्यति ॥१८९॥
एवं पठति यो वर्णः सिद्धिर्भवति नान्यथा । प्रातः स्नात्वा विधानेन नित्यकर्मं समाप्य च ॥१९०॥
सम्यक् पूजाविधिःकुर्यान्नामपाठस्तदंतरम् । पूजां कर्तुमशक्तोपि पूजाफलमवाप्नुयात् ॥१९१॥
इति श्रीब्रह्मांडपुराणे श्रीकेदार माहात्म्ये श्रीजमदग्नियोगिसंवादे श्रीकेदार अष्टाधिक सहस्रनामस्तोत्रं संपूर्णम् ॥

**॥ श्रीनाथचरणार्पणमस्तु ॥**

## श्रीगणेशाय नमः ॥ अथ श्रीज्योतिर्लिंगाष्टकम् ॥

पायी तुझ्या मस्तक हे असावे नयनी सदा रूप तुझे वसावे
तूझे चरित्र श्रवणी श्रवणासि द्यावे श्रीनाथजी मजप्रती वरदान द्यावे ॥१॥

वाणीस हे अतुल नाम तुझे घडोदे ध्यानी तुझ्या मन सदैव बरे जडोदे
पाणीस पूजन तुझे विधियुक्त व्हावे श्रीनाथजी मजप्रती वरदान द्यावे ॥२॥

हे चित्त निश्चळ तुझे भजनी वळावे दुर्गूण दु:संगति नातळावे
क्रोधादि काम रिपु हे समुळी गळावे श्रीनाथजी मजप्रती वरदान द्यावे ॥३॥

पायी अमंगळ पथा पथि नाक्रमावे यात्रा शिवालय कथा पथ आक्रमावे।
अज्ञान मोह कुमती सखया हरावे। श्रीनाथजी मजप्रती वरदान द्यावे ॥४॥

वाचेसहीत मन देह वळोनि मागे भक्तीसि लावि आपुल्या दृढ हेचि मागे
बाह्यांतरी अचल रूप तुझे भरावे श्रीनाथजी मजप्रती वरदान द्यावे ॥५॥

ब्रह्मस्व मुक्त करणे तुज भार पायी घालू नको मज दिना भलत्या अपायी
आहे पतीत सखया दिन उद्धरावे श्रीनाथजी मजप्रती वरदान द्यावे ॥६॥

परमार्थ साधुनि प्रपंच बरा असावा दारिद्र्य दुःख भय लेश कदा नसावा
स्त्रीपुत्रयुक्त मजला सुख हे असावे श्रीनाथजी मजप्रती वरदान द्यावे ॥७॥

पायी ब्रिदावळि विराजित पावना की धावे भक्ताचे संकट हरावया की
राखे ब्रिदास भवसंकट हे हरावे श्रीनाथजी मजप्रती वरदान द्यावे ॥८॥

श्रीनाथजी शिवजगद्गुरु ज्योतिर्लिंगा दे जन्म ज्यासि तव भक्ति तथा कुळीगा
गोविंदनंदन सुतांतर की न द्यावे श्रीनाथजी मजप्रती वरदान द्यावे ॥९॥

## ॥ श्रीशिवस्तुती ॥

कैलासराणा शिव चंद्रमौळी
फणींद्र माथा मुगुटी झळाळी!
कारुण्यसिंधू भवदु:खहारी!
तुजवीण शंभो मज कोण तारी ॥१॥

रवींदुदावानला पूर्ण भाळी
स्वतेज नेत्री तिमिरौघ जाळी|
ब्रह्मांडधीशा मदनांतकारी|
तुजवीण शंभो मज कोण तारी ॥२॥

जटा विभूती उटि चंदनाची
कपालमाला प्रित गौतमीची
पंचानना विश्वनिवांतकारी
तुजवीण शंभो मज कोण तारी ॥३॥

वैराग्ययोगी शिव शूलपाणी
सदा समाधी निजबोध वाणी
उमानिवासा त्रिपुरांतकारी
तुजवीण शंभो मज कोण तारी ॥४॥

उदारमेरू पति शैलजेचा
श्रीविश्वनाथ म्हणती सुरांचा
दयानिधी तो गजचर्मधारी
तुजवीण शंभो मज कोण तारी ॥५॥

ब्रह्मादि बंदी अमरादिनाथ
भुजंगमाला धरि सोमकान्त
गंगा शिरी दोष महा विदारी
तुजवीण शंभो मज कोण तारी ॥६॥

कर्पूरगौरी गिरिजा विराजे
हलाहळ कंठ निळाच साजे
दारिद्र्यदु:खे स्मरणे निवारी
तुजवीण शंभो मज कोण तारी ॥७|

स्मशानक्रीडा करिता सुखावे
तो देवचुडामणि कोण आहे
उदासमूर्ति जटाभस्मधारी
तुजवीण शंभो मज कोण तारी ॥८॥

भूतादिनाथ अरि अंतकाचा
तो स्वामी माझा ध्वज शांभवाचा
राजा महेश बहुबाहुधारी
तुजवीण शंभो मज कोण तारी ॥९॥

नंदी हराचा हर नंदिकेश
श्रीविश्वनाथ म्हणती सुरेश
सदाशिव व्यापक तापहारी
तुजवीण शंभो मज कोण तारी ॥१०॥

भयानक भीम विक्राळ नग्न
लीलाविनोदे करि काम भग्न
तो रुद्र विश्वंभर दक्ष भारी
तुजवीण शंभो मज कोण तारी ॥११॥

इच्छा हराची जग हे विशाळ
पाळी रची तो हरि ब्रह्मगोळ
उमापती भैरव विघ्नहारी
तुजवीण शंभो मज कोण तारी ॥१२॥

भागिरथीतीर सदा पवित्र जेथे
असे तारक ब्रह्ममंत्र
विश्वेश विश्वंभर त्रिनेत्रधारी
तुजवीण शंभो मज कोण तारी ॥१३॥

प्रयाग वेणी सकळा हराच्या
पदारविंदी वहाती हरीच्या
मंदाकिनी मंगल मोक्षकारी
तुजवीण शंभो मज कोण तारी ॥१४॥

किर्ती हराची स्तुति बोलवेना
कैवल्यदाता मनुजा कळेना
एकाग्रनाथ विष अंगिकारी
तुजवीण शंभो मज कोण तारी ॥१५॥

सर्वांतरी व्यापक जो नियंता तो
प्राणलिंगाजवळी महंता
अंकी उमा ते गिरिरुपधारी
तुजवीण शंभो मज कोण तारी ॥१६॥

सदा तपस्वी असे कामधेनू
सदा सतेज शतकोटि भानू
गौरीपती जो सदा भस्मधारी
तुजवीण शंभो मज कोण तारी ॥१७॥

कर्पूरगौर स्मरल्या विसावा
चिंता हरी जो भजका सदैवा
अंती स्वहीतसुचना विचारी
तुजवीण शंभो मज कोण तारी ॥१८॥

विरामकाळी विकळे शरीर
उदास चित्ती न धरीच धीर
चिंतामणी चिंतनी चित्तहारी
तुजवीण शंभो मज कोण तारी ॥१९॥

सुखावसानी सकळे सुखाची
दु:खावसानी टळती जगाची
देहावसानी धरणी थरारी
तुजवीण शंभो मज कोण तारी ॥२०॥

अनुहतशब्द गगनी न माय
तिचे निनादे भव शून्य होय
कथा निजांगे करुणा कुमारी
तुजवीण शंभो मज कोण तारी ॥२१॥

शांतिस्वलीला वदनी विकासे
ब्रह्मांडगोळी असुनी न दीसे
भिल्ली भवानी शिव ब्रह्मचारी
तुजवीण शंभो मज कोण तारी ॥२२॥

पीतांबरे मंडित नाभि त्याची
शोभा जडीत वरि किंकिणींची
श्रीवेददत्त दुरितांतकारि
तुजवीण शंभो मज कोण तारी ॥२३॥

जीवाशिवाची जडली समाधी
विटला प्रपंची तुटली उपाधी
शुद्धस्वरे गर्जति वेद चारी
तुजवीण शंभो मज कोण तारी ॥२४॥

निधानकुंभ भरला अभंग
पहा निजांगें शिव ज्योतिलिंग
गंभीर धीर सुरचक्रधारी
तुजवीण शंभो मज कोण तारी ॥ २५॥

मंदार बिल्वें बकुलें सुवासी
माला पवित्र वहा शंकरासी
काशीपुरीं भैरव विश्व तारी
तुजवीण शंभो मज कोण तारी ॥ २६॥

नागेशनामा सकळां जिव्हाळा
मना जपें रे शिवमंत्रमाळा
पंचाक्षरी ध्यान गुहाविहारी
तुजवीण शंभो मज कोण तारी ॥ २९॥

जाई जुई चंपक पुष्पजाती
शोभे गळां मालतीमाळ हातीं
प्रतापसूर्य शरचापधारी
तुजवीण शंभो मज कोण तारी ॥ २७॥

अलक्ष्यमुद्रा श्रवणीं प्रकाशे
संपूर्ण शोभा वदनीं विकासे
नेई सुपंथें भवपैलतीरीं
तुजवीण शंभो मज कोण तारी ॥ २८॥

एकांति ये रे गुरुराज स्वामी
चैतन्यरूपीं शिव सौख्यनामीं
शिणलों दयाळा बहुसाल भारी
तुजवीण शंभो मज कोण तारी ॥ ३०॥

**शास्त्राभ्यास नको श्रुती पढुं नको तीर्थांसि जाऊं नको**
**योगाभ्यास नको व्रतें मख नको तीव्रें तपें तीं नको**
**काळाचें भय मानसीं धरुं नको दुष्टांस शंकूं नको**
**ज्याचीया स्मरणें पतीत तरती तो शंभु सोडूं नको**

## ॥ श्री महालक्ष्म्यष्टकम् ॥

श्रीगणेशाय नमः ॥ इंद्र उवाच ।

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते । शंखचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ॥ १ ॥
नमस्ते गरुडारूढे कोलासुरभयंकरि । सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते ॥२॥
सर्वज्ञे सर्ववरदे सर्वदुष्टभयंकरि । सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते ॥३॥
सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि ।मंत्रमूर्ते सदा देवि महालक्ष्मि नमोऽस्तु ते ॥ ४ ॥
आद्यंतरहिते देवि आद्यशक्ति महेश्वरि । योगजे योगसंभूते महालक्ष्मि नमोऽस्तु ते ॥५॥
स्थूलसूक्ष्ममहारौद्रे महाशक्ति महोदरे। महापापहरे देवि महालक्ष्मि नमोऽस्तु ते ॥६॥
पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि । परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते ॥७॥ श्वे
तांबरधरे देवि नानालंकारभूषिते । जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते ॥८॥
महालक्ष्म्यष्टकस्तोत्रं यः पठेद्भक्तिमान्नरः। सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥ ९॥
एककाले पठेन्नित्यं महापापविनाशनम् । द्विकालं यः पठेन्नित्यं धनधान्यस. मन्वितः ॥ १० ॥
त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् । महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥११॥
इतींद्रकृतः श्रीमहालक्ष्म्यष्टकस्तवः संपूर्णः ॥

## || श्री कालभैरवाष्टक ||

देवराज्य सेव्यमानपावनाघ्रिपंकजम्
व्यालयज्ञ सूत्रमिंदू शेखरं कृपाकरम् |
नारदादि योगिवृंद वंदितं दिगंबरम्
काशिकापुराधिनाथ कालभैरवम् भजे || 1 ||

भानुकोटिभास्करं भवाब्दितारकं परं
नीलकण्ठमीप्सिथार्थ दायकं त्रिलोचनम |
कालकाल मम्बुजाक्षमक्ष शूलमक्षरं
काशिकापुराधिनाथ कालभैरवम् भजे || 2 ||

शूलटंक पाशदण्ड पाणिमादिकारणं
श्यामकायमादिदेवमक्षरं निरामयम |
भीमविक्रम प्रभुं विचित्र तांडवप्रियं
काशिकापुराधिनाथ कालभैरवम् भजे || 3 ||

भुक्तिमुक्ति दायकं प्रशस्तलोकविग्रहं
भक्तवस्तलं स्थितं समस्तलोकविग्रहं |
विनिकण्वन्मनोज्ञ् हेम् किंकिणीलस्तकटिं
काशिकापुराधिनाथ कालभैरवम् भजे || 4 ||

धर्मसेतू पालकं त्वधर्ममार्ग् नाशकम्
कर्मपाशमोचकम् सुशर्मदारकम् विभुम् |
स्वर्णवर्ण शेष् पाश शोभितांगमण्डलं
काशिकापुराधिनाथ कालभैरवम् भजे || 5 ||

रत्नपादुकाप्रभाभिराम पाद युग्मकम्
नित्यमद्वितीयमिष्ट दैवतं निरंजनम् |
मृत्यु दर्प नाशनं करालदंष्ट्र मोक्षणम्
काशिकापुराधिनाथ कालभैरवम् भजे || 6 ||

अट्टहास भिन्नपद्म जाण्ड् कोश संततिं
दृष्टिपात नष्टपाप जालमुग्र शासनं |
अष्टसिद्धिदायकं कपालमालिकाधरं
काशिकापुराधिनाथ कालभैरवम् भजे || 7 ||

भूतसंघनायकं विशालकिर्तीदायकं
काशिवास लोकपुण्यपापशोधकं विभुम् |
नितिमार्गकोविदम् पुरातनम् जगत्पतिं
काशिकापुराधिनाथ कालभैरवम् भजे || 8 ||

कालभैरवाष्टकम् पठन्ति ये मनोहरं
ज्ञानमुक्ति साधनम् विचित्रपुण्यवर्धनम् |
शोक मोह् दैन्य लोभ कोपताप् नाशनम्
प्रयान्ति कालभैरवांघ्रिसन्निधिम् नरा धृवम्
काशिकापुराधिनाथ कालभैरवम् भजे || 9 ||

|| इति श्रीमद् शंकराचार्य विराचीतम श्रीकाळभैरवाष्टकम् संपूर्णं ||